प्रतिकर्म आरभते। एवं जानताऽपि प्रायश्चित्तविधिमात्मनः सम्यक्करणेन तथाऽपि प्रकटतरमालोचयितव्यमवश्यमिति। किञ्च– सुगमा। 'न हु' नैव शुद्ध्यते सशल्यः पुरुषः, कथं पुनः शुद्ध्यते ?, यथा भणितं धुतरजसां शासने तथा शुद्ध्यते, कथं पुनः शुद्ध्यते ? अत आह–उद्धृतसर्वशल्यो जीवः शुद्ध्यति धुतक्लेश इति, तस्माद्यद्यपि कथमपि किञ्चिदकार्यं कृतं ततस्तदालोचयितव्यम्। कथं पुनस्तत्कृतं भवतीत्यत आह–'सहसा' अप्रतर्कितमेव प्राणिवधादिकमकार्यं यदि कृतं ततस्तस्मात्प्रतिक्रमितव्यमित्येतत् द्वितीयगाथायां वक्ष्यति, अज्ञानेन च कृतं, न तत्र प्राणी ज्ञातो व्यापादितश्च, भीतेन–आत्मभयात् मा भूदयं मां मारयिष्यतीत्यतः प्राणव्यपरोपणं यदि कृतं, [3]प्रेरितेन वा परेण यदि कृतं, व्यसनेन वा आपदा यदि कृतं आतङ्केन वा–ज्वराद्युपसर्गेण यदि कृतं मूढेन वा–रागद्वेषैर्यदि कृतं किञ्चिदकार्यं ततः यत्किञ्चित्कृतमकार्यं तत्पुनः 'न हु' नैव समाचरितुं लभ्भा–उपलभ्येत यथा तथा प्रतिक्रमितव्यं, एतदुक्तं भवति–किञ्चिदकार्यं कृत्वा पुनर्यथा त[4]न्नैव भवति तन्नैव क्रियते तथा तस्य प्रतिक्रमितव्यं, न पुनस्तदकार्यं हृदयेन वोढव्यं, सर्वमालोचयितव्यमित्यर्थः। कथं पुनस्तदालोचयितव्यमित्यत आह–तस्य च साधोर्यत्प्रायश्चित्तं मार्गविदो गुरव उपदिशन्ति तत्प्रायश्चित्तं 'तथा' तेनैव विधिनाऽऽचरितव्यम्, कथम् ?, अनवस्थाप्रसङ्गभीतेन सताऽऽचरितव्यम्, अनवस्था नाम यद्यकार्यसमाचरणात्प्रायश्चित्तं न दीयते न क्रियते वा ततोऽन्योऽपि एवमेव समाचरति यदुत प्राणिव्यपरोपणादौ न किञ्चित्प्रायश्चित्तं भवति ततश्च समाचरणे न कश्चिद्दोष इति, एवमनवस्थाप्रसङ्गभीतेन साधुना प्रायश्चित्तं समाचरितव्यमिति। इतश्चालोचयितव्यम्–न तत्करोति दुःखं शस्त्रं नापि विषं नापि 'दुःप्रयुक्तः' दुःसाधितो

१ तथाप्यालो° आ. पा. १–२। २ मामयं मार° पा. १ पु। ३ तस्मात्प्रतिक्रमितव्यं, प्रे° पा. १–२। ४ नैव क्रियते आ.। ५ °लोचयितव्यम्, आ।

जं किंचि कयमकज्जं न हु तं लब्भा पुणो समायरिउं। तस्स पडिक्कमियव्वं न हु तं हियएण वोढव्वं ॥८०१॥
जह बालो जपंतो कज्जमकज्जं च उज्जुयं भणइ। तं तह आलोएज्जा मायामयविप्पमुक्को उ ॥८०२॥
तस्स य पायच्छित्तं जं मग्गविऊ गुरू उवइसंति। तं तह आयरियव्वं अणवत्थपसंगभीएण ॥८०३॥
नवि तं सत्थं व विसं व दुप्पउत्तो व कुणइ वेयालो। जंतं व दुप्पउत्तं सप्पो व पमाइणो कुद्धो ॥८०४॥
जं कुणइ भावसल्लं अणुद्धियं उत्तिमट्ठकालंमि। दुल्लभबोहीयत्तं अणंतसंसारियत्तं च ॥ ८०५ ॥

अत ऊर्ध्वं धर्म्योद्धरणं वक्ष्ये धीरपुरुषप्रज्ञप्तं, 'यत्' धर्म्योद्धरणं ज्ञात्वा सुविहिताः कुर्वन्ति दुःखक्षयं धीरा इति। द्विविधा भवति शुद्धिः-द्रव्यशुद्धिः भावशुद्धिश्च, तत्र 'द्रव्ये' द्रव्यविषया शुद्धिर्वस्त्रादीनामवगन्तव्या, भावे तु मूलोत्तरगुणेषु शुद्धिर्ज्ञातव्या, एतदुक्तं भवति-मूलगुणोत्तरगुणालोचनया भावशुद्धिर्भवतीति। एवं तावन्मूलगुणोत्तरगुणेषु स्खलितेनालोचना दातव्या। इदानीं यस्मै आलोचना दीयते तेनाप्यालोचयितव्यमिति, एतदेव प्रदर्शनयन्नाह-चारित्रसत्कपादिषट्त्रिं शद्गुणसमन्वितेनाप्यन्यस्य परसाक्षिकी विशुद्धिः कर्तव्या सुष्ठ्वपि ज्ञानक्रियाव्यवहारकुशलेन सुविहितेनेति। अत्रोदाहरणं क्रियते-यथा सुकुशलोऽपि वैद्योऽन्यस्मै वैद्याय कथयति आत्मव्याधिं, श्रुत्वा च तस्य वैद्यस्य सोऽपि वैद्यो यस्मै कथितं स

१ यत्ता आ०। २ दिवंति आ. च १-२ ड०।

'उत्कृष्टतः' अतिशयेन सम्यगाराधनां कृत्वा त्रीन् भवान् गत्वा 'निर्वाणं' मोक्षमवश्यं प्राप्नोतीति, एतदुक्तं भवति—यदि परमसमाधानेन सम्यक् कालं करोति ततस्तृतीये भवेऽवश्यं सिद्ध्यतीति। आह परः—उत्कृष्टतोऽष्टभवाभ्यन्तरे सामायिकं प्राप्य नियमात्सिद्ध्यतीति, जघन्यतः पुनरेकस्मिन्नेव भवे सामायिकं प्राप्य सिद्ध्यतीत्युक्तं ग्रन्थान्तरे, ततश्च यदुक्तं त्रीन् भवानतीत्य सिद्ध्यतीति तदेतन्नाप्युत्कृष्टं नापि जघन्यं ततश्च विरोध इति, उच्यते, अनालीढसिद्धान्तसद्भावेन यत्किञ्चिदुच्यते, यत्तदुक्तं जघन्यत एकेनैव भवेन सिद्ध्यतीति तद्वज्रर्षभनाराचसंहननमङ्गीकृत्योक्तं, एतच्च छेवट्ठिकासंहननमङ्गीकृत्योच्यते, छेवट्ठिकासंहननो हि यद्यतिशयेनाराधनां करोति ततस्तृतीये भवे मोक्षं प्राप्नोति, उत्कृष्टशब्दश्चात्रातिशयार्थे द्रष्टव्यो न तु भवान[1]ङ्गीकृत्य, भवाङ्गीकरणे पुनरष्टभिरेवोत्कृष्टतो भवे[2]षु छेवट्ठिकासंहननो[3] सिद्ध्यतीति।

[4]एसोहसामायारी कहिया भे धीरपुरिसपन्नत्ता। संजमतवड्ढगाणं निग्गंथाणं महरिसीणं ॥ ८१० ॥

[5]एयं सामायारिं जुंजंता चरणकरणमाउत्ता। साहू खवंति कम्मं अणेगभवसंचियमणंतं ॥ ८११ ॥

एसा अणुग्गहत्था फुडवियडविसुद्धवंजणाइन्ना[6]। एक्कारसहिं सएहिं [7]एगुणवन्नेहिं सम्मत्ता ॥ ८१२ ॥

सुगमाः ॥

---

१ भवमङ्गी° आ पा. १। २ भवे छेव° आ. पा. २। ३ ने हि सि° पा १–२। ४ एसा सामा° आ.। ५ एसा ओहसामायारी जुं° ल. १, एसोघसामायारी जुं° पा. २। ६ °णा इणमो। ल. १। ७ सट्ठिहिं अहिएहिं संगहिआ ल १. २.।

वेतालः मन्त्र वा दुष्प्रयुक्त सर्पो वा क्रुद्धः प्रमादिनः पुरुषस्य दुःखं करोति यत्करोति भावशल्यमनुद्धृतम् 'उत्तमार्थकाले' अनशनकाले, किं करोत्यत आह–'दुर्लभबोधिकत्वं अनन्तसंसारिकत्वं चेति, एतत् महादुःखं करोति भावशल्यं अनुद्धृत शस्त्रादि दुःखानि पुनरेकभव एव भवन्ति, अतः ज्ञात्वा सेयत्नेन सर्वमालोचयितव्यम्।

तो उद्धरति गारवरहिता मूलं पुणब्भवलयाण। मिच्छादंसणसल्लं मायासल्लं नियाणं च ॥ ८०६ ॥

उद्धरियसव्वसल्लो आलोइयनिंदिओ गुरुसगासे। होइ अतिरेगलहुओ ओहरियभरोव्व भारवहो ॥८०७॥

उद्धरियसव्वसल्लो भत्तपरिन्नाए धणियमाउत्तो। मरणाराहणजुत्तो चंदगविज्झं समाणेइ ॥ ८०८ ॥

आराहणाइ जुत्तो सम्मं काऊण सुविहिओ कालं। उक्कोसं तिन्नि भवे गंतूण लभेज्ज निव्वाणं ॥८०९॥

तत एवमालोच्य गारवरहिता मुनयः 'उद्धरन्ति' उत्पाटयन्ति मूलं पुनर्भवलतानां येन मिथ्यादर्शनशल्यं मायाशल्यं निदानशल्यं चोद्धरन्तीति। सुगमा, नवरं–अतिरेक–अत्यर्थं लघुर्भवति, 'ओहरियभारो' उत्तारितभारः 'भारवहः' गर्दभादिः स यथा लघुर्भवति एवमालोचिते सति कर्मलघुत्वं भवतीति। यथैवंविधः स उद्धृतसर्वशल्यः 'भत्तपरिन्नाए' भक्तप्रत्याख्याने 'धणियम्' अत्यर्थम् 'आयुक्तः' प्रयत्नपरो मरणाराधनयुक्तः, स एवंविधश्चन्द्रकवेधं 'समानयति' करोतीत्यर्थः। अत्र च कथानकं राधावेधमल्लीकस्य आवश्यकादवसेयमिति। किञ्च–आराधनया युक्तः सम्यक् कृत्वा सुविहितः कालं पुनश्च

१ पि भार आ भा. १-२ पृ.। २ प्रक्षालय० धम्म आ. पु.।

॥ इति श्रीमद्द्रोणाचार्यविरचिता श्रीओघनिर्युक्तिटीकामूलसूत्रालङ्कृता समाप्ता ॥

टीकायां अक्षरगणनया ग्रन्थाग्रं ६८२५ तथा सूत्रेण गाथाप्रमाणेन

ग्रन्थाग्रं २४६० उभयोर्ग्रन्थाग्रं ८२८५ शुभं भवतु ।